दोषः। न च शङ्कितव्यभिचारः; निर्बीजशङ्कायाः सर्वत्र सुलभत्वात्। नापि व्याप्यान्तरसहवृत्तिः; एकत्रापि साध्येऽनेकसाधनोपगमात्। नाप्यल्पविषयः; धूमादेस्तथाभावेऽपि (थाभूतस्यापि) हेतुत्वात्। ननु धूमो (मोऽपि) वढिद्धङ्ढड़14;नमात्रेऽप्रयोजक एव, तन्निवृत्तावपि तदनिवृत्तेः। आद्र्रेन्धनवत्वं वढिद्धङ्ढड़14;नविशेषं प्रति तु प्रयोजकः; तन्निवृत्तौ तस्यैव निवृत्तेरिति- एतदप्ययुक्तम्- सामान्यप्रयोजकतायां विशेषसाधकत्वायोगात्; तदसिद्धौ तस्यासिद्धिनियमात्; सिद्धौ वा सामान्यविशेषभावानुपपत्तेः। नापि क्लृप्तसामर्थ्येऽन्यस्मिन् कल्पनीयसामर्थ्याप्रयोजकः; नाशे कार्यत्वसावयवत्वयोरपि हेतुभावादिति। झ्कु.3.328ट तदेतदपेशलम्- कथं हि विशेषाभावात् कश्चिद्व्यभिचरति कश्चिच्च नेति श्कयमवगन्तुम्। ततो निर्णायकाभावे सति साहित्यदर्शनमेव शङ्काबीजमिति क्वासौ निर्बीजा। एवं सति अतिप्रसक्तिरपि चार्वाकनन्दिनी (179)नोपालम्भाय। झ्कु.3.329ट स्वभावादेव कश्चित् किञ्चिद्व्यभिचरति, कश्चिच्च नेति स्वभाव एव विशेष इति चेत्- केन चिढद्धङ्ढड़14;नेन पुनरसौ निर्णेय इति निपुणेन भावनीयम्; भूयोदर्शनस्य शतशः प्रवृत्तस्यापि भङ्गदर्शनात्। यत्र भङ्गो न दृश्यते (180)तत् तथेति चेत्- आपाततो न दृश्यते इति सर्वत्र कालक्रमेणापि न द्रक्ष्यत इति को नियन्तेति। झ्कु.3.330ट तस्मादुपाधितद्विरहावेव व्यभिचाराव्यभिचारनिवन्धनम्। तदवधारणं चाशक्यमिति। ननु यः सर्वैः प्रमाणैः सर्वदाऽस्मदादिभिर्यद्वत्तया नोपलभ्यते, नासौ तद्वान्; यथा बकः श्यमिकया। नोपलभ्यते च वढद्धङ्ढड़14;नौ धूम उपाधिमत्तया- इति श्क्यमिति चेन्न- अस्याप्यनुमानतया तदप#ेक्षायामनवस्थानात्। (181)सर्वादृष्टेश्च सन्देहात्; स्वादृष्टेर्व्यभिचारातः; सर्वदेत्यसिद्धेः। झ्कु.3.331ट तादात्म्यतदुत्पत्तिभ्यां नियम इत्यन्ये। तत्र तादात्म्यं विपक्षे बाधकात् भवति। तदुत्पत्तिश्च पौर्वापर्येण प्रत्यक्षानुपलम्भाभ्याम्। (182)न ह्वेवं सति शङ्कापिशाची अवकाशमासादयति; आशङ्क्यमानकारणभावस्यापि पिशाचादेरेतल्लक्षणाविरोधेनैव तत्त्वनिर्वाहादिति- (183) नैवमपि; उभयगामिनोऽव्यभिचारनिबन्धनस्यैकस्याविवेचनात्; प्रत्येकं चाव्यापकत्वात्। कुतश्च कार्यात्मानौ कारणमात्मानं च न व्यभिचारत इति। झ्कु.3.332ट अत्रोच्यते- शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम्। व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः।।7।। झ्कु.3.333ट कालान्तरे कदाचिद्व्यभिचरिष्यतीति कालं भाविनमाकलय्य शङ्क्येत। तदाकलनं च नानुमानमवधीर्य कस्यचित्। मूहूर्तयामाहोरात्रपक्षमासत्र्वयनसंवत्सरादयो हि भाविनो भवन्मुहूर्ताद्यनुमेया एव, अनवगतेषु स्मरणस्याप्यनाशङ्कनीयत्वात्। अनाकलने वा कमाश्रित्य व्यभिचारः शङ्क्येत (रशङ्केति)। तथा च सुतरामनुमानस्वीकारः। एवं च देशान्तरेऽपि वक्तव्यम्। झ्कु.3.334ट स्वीकृतमनुमानम्। सुह्रद्भावेन पृच्छामः- कथमाशङ्का निवर्तनीयेति चेत्- न- यावदाशङ्कं तर्कप्रवृत्तेः। झ्कु.3.335ट तेन हि वर्तमानेनोपाधिकोटौ तदायत्तव्यभिचारकोटौ वाऽनिष्टमुपनयता इच्छाविच्छिद्यते। विच्छन्नविपक्षेच्छश्च प्रमाता भूयोदर्शनोपलब्धसाहचर्यं लिङ्गगमनाकुलोऽधितिष्ठति; अधिष्ठिताच्च करणात् क्रियापरिनिष्पत्तिरिति किमनुपपन्नम्। झ्कु.3.336ट ननु तर्कोऽप्यविनाभावमपेक्ष्य प्रवर्तते। ततोऽनवस्थया भवितव्यम्- न- शङ्काया व्याघातावधित्वात्। तदेव ह्याशङ्क्यते, यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातादयो दोषा नावतरन्तीति लोकमर्यादा। न हि हेतुफलभावो न भविष्यतीति शङ्कितुमपि शक्यते। तथा सति शङ्कैव न स्यात्, सर्वं मिथ्या भविष्यतीत्यादिवत्। झ्कु.3.337ट अथाव्यतीन्द्रियोपाधिनिषेधे किं प्रमाणमि(धः किंप्रमाणक इ)त्युच्यतामिति चेत्- न वै कश्चिदतीन्द्रियोपाधिः प्रमाणसिद्धोऽस्ति, यस्याभावे प्रमाणमन्वेषणीयम्। केवलं साहचर्ये निबन्धनान्तरमात्रं शङ्क्यते। ततः शङ्कैव फलतः स्वरूपतश्च निवर्तनीया। तत्र फलमस्याः विपक्षस्यापि जिज्ञासा तर्कादाहन्य निवर्तते; ततोऽनुमानप्रवृत्तौ शङ्कास्वरूपमपीति सर्वं सुस्थम्। झ्कु.3.338ट न चैतदनागमम्, न्यायाङ्गतया तर्कं व्युत्पादयतः सूत्रकारस्याभिमतत्वात्। अन्यथा तद् व्युत्पादनवैयर्थ्यात्। झ्कु.3.339ट तदयं सङ्क्षेपः- यत्रानुकूलतर्को नास्ति सोऽप्रयोजकः। स च द्विविधः शङ्कितोपाधिर्निश्चितोपाधिश्च; यत्रेदमुच्यते- "यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते। विपक्षस्य कुतस्तावत् हेतोर्गमनिकाबलम्।।' झ्कु.3.340ट तत्रोपाधिस्तु- साधनाव्यापकत्वे सति साध्यव्यापकः। तद्धर्मभूता हि व्याप्तिर्जपाकुसुमरक्ततेव स्फटिके, साधनाभिमते चकास्तीत्युपाधिरसावुच्यत इति। तदिदमाहुः- "अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः। तैर्दृष्टैरपि नैवेष्टा व्यपकांशावधारणा।।' (मी.श्लो.वा.14.1-5.) इति। झ्कु.3.341ट तदनेन विपक्षदण्डड्ङत्ध्;भूतेन तर्केण सनाथे भूयोदर्शने, कार्यं वा कारणं वा ततोऽन्यद्वा, समवायि वा संयोगि वाऽन्यथा वा भावो वाऽभावो वा, सविशेषणं वा निर्विशेषणं वा लिङ्गमिति निश्शङ्कमवधारणीयम्; अन्यथा तदाभास इति रहस्यम्। झ्कु.3.342ट तादात्म्यतदुत्पत्त्योरप्येतदेव बीजम्। यदि हि का(यदि का)र्यात्मानौ कारणमात्मानं चातिपतेताम्, तदा तयोस्तत्त्वं व्याहन्येत। अत एव सामग्रीनिवेशिनश्चरमकारणादपि कार्यमनुमिमते (184)सौगता अपि। तस्माद्विपक्षबाधकमेव प्रतिबन्धलक्षणम्। झ्कु.3.343ट तथा हि- शाकाद्याहारपरिणतिविरहिणि मित्रातनये, न किञ्चिदनिष्टमिति नासौ तस्य व्यापिका; व्यापिका तु श्यामिकायाः, कारणत्वावधारणात्। कारणं च तत् तस्य; तदतिपत्य भवति चेति व्याहतम्। एवमन्यत्राप्यूहनीयमिति। झ्कु.3.344ट क्व पुनरप्रयोजकोऽन्तर्भवति? न क्वचिदित्येके। यथा हि सिद्धसाधनम्- न बाधितविषयम्, विषयापहाराभावात्; नापि निर्णये सति पक्षत्वातिपातादपक्षधर्मः, कालातीतविलोपप्रसङ्गात्; न चानैकान्तिकादिः, व्यभिचाराद्यभावात्- तथाऽयमपि। सूत्रं तूपलक्षणपरमिति- तदसत#्- विभागस्य न्यूनाधिकसङ्ख्याव्यवच्छेदफलत्वात्। झ्कु.3.345ट क्व तर्हि द्वयोरन्तर्निवेशः? असिद्धे एव। तथा हि- व्याप्तस्य हि पक्षधर्मताप्रतीतिः सिद्धिः। तदभावोऽसिद्धि। इयं च व्याप्तिपक्षधर्मता(185)स्वरूपाणामन्यतमाप्रतीत्या भवन्ती यथासङ्ख्यमन्यथासिद्धिराश्रयासिद्धिः स्वरूपासिद्धिरित्याख्यायते। मध्यमाऽप्याश्रयस्वरूपाप्रतीत्या तद्विशेषणपक्षत्वाप्रतीत्या वेति द्वयी। तत्र, चरमासिद्धसाधनमिति व्यपदिश्यते; व्याप्तिस्थितौ पक्षत्वस्याहत्य विघटनात्। न त्वेवं बाधे; व्याप्तेरेव प्रथमं विघटनादिति विशेषः। झ्कु.3.346ट यत्त्वप्रयोजकः सन्दिग्धानैकान्तिक इत्यनैकान्तिकेऽन्तर्भाव्यते- तदसत्- व्याप्त्यसिद्ध्या हि निमित्तेन व्यभिचारः शङ्कनीयोऽन्यथा वा। प्रथमे असिद्धिरेव दूषणम्; उपजीव्यत्वात्; नानैकान्तिकम्; उपजीवकत्वात्। (186)अन्यथाशङ्कात्वदूषणमेव; निर्णीते तदनवकाशादिति। ।।तृतीयस्तबके ई॰ारस्योपमानाबाध्यत्वनिरूपणम्।। झ्कु.3.347ट उपमानं तु बाधकमनाशङ्कनीयमेव, विषयानतिरेकादिति केचित् तथाहि- न तावदस्य विषयः सादृश्यव्यपदेश्यं पदार्थान्तरमेव सम्भावनीयम्; परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः।।8।। न हि भावाभावाभ्यामन्यः प्रकारस्सम्भावनीयः, परस्परविधिनिषेधरूपत्वात्। न भाव इति हि निषेधमात्रेणैवाभावविधिः। ततस्तं विहाय कथं स्ववचनेनैव पुनस्सह्रदयो निषेधेत्, नाभाव इति।

एवं नाभाव इति हि निषेध एव भावविधिः। ततस्तं विहाय स्ववाचैवानुन्मत्तः कथं पुनर्निषेधेत् न भाव इति। अत एवम्भूतानामेकताऽप्यशक्यप्रतिपत्तिः, प्रतिषेधविध्योरेकत्रा(त्वा)सम्भवात्। तस्माद्भावाभावावेव तत्त्वम्। इ्कु.3.348ट भावत्वेऽपि गुणवन्निर्गुणं वेति द्वयमेव (वेत्येतदपि) पूर्ववत्। पूर्वं द्रव्यमेव। उत्तरञ्चाश्रितमनाश्रितं वेति द्वयमेव पूर्ववत्। तत्रोत्तरं समवाय एव, अनवस्थाभयात्। आश्रितं तु सामान्यवन्निःसामान्यञ्चेति पूर्ववद्द्वयमेव। तत्र प्रथममपि स्पन्दोऽस्पन्द इति द्वयमेव। एतच्च यथासङ्ख्यं कर्म गुण इति व्यपदिश्यते। निस्सामान्यं निर्गुणमाश्रितं तु एकाश्रितमनेकाश्रितं वेति प्रागिव द्वयमेव। एतदपि यथासङ्ख्यं विशेषस्सामान्यञ्चेत्यभिधीयते। तत् (187) एतत्सादृश्यमेतास्वेकां विधामासादयत् नातिरिच्यते। अनासादयन्नपदार्थीभूय स्थातुमुत्सहते। एतेन (188) शक्तिसङ्ख्यादयो व्याख्याताः। ततोऽभावेन सह सप्तैव पदार्था इति नियमः। अतो नोपमानविषयोऽर्थान्तरमिति। इ्कु.3.349ट स्यादेतत्- भवतु सामान्यमेव सादृश्यम्, तदेव तस्य विषयस्स्यात्। तत्स(गोस)दृशोऽयमिति हि प्रत्ययो नेन्द्रियजन्यः, तदापातमात्रेणानुत्पत्तेरिति चेत्- न- पूर्वपिण्डड्ड्त्ध्;ानुसन्धानरूपसहकारिवैधुर्येणानुत्पत्तेः (ण प्रागजननात् सोऽयमिति प्रत्यभिज्ञानवदिति। इ्कु.3.350ट नन्वेतत्सदृशस्स इति नेन्द्रियजन्यम्, तेन तस्यासम्बन्धात्। नचेदं स्मरणम्, तत्पिण्डड्ड्त्ध्;ानुभवेऽपि विशिष्टस्याननुभवात्। नचैतदपि, अयं स इति विपरीतप्रत्यभिज्ञानवदुपपादनीयम्; तत्तेदन्तोपस्थापनक्रमविपर्ययेऽपि विशेष्यस्येन्द्रियेण सन्निकर्षाविरोधात्; तस्य सन्निहितवर्तमानगोचरत्वात्। प्रकृते तु तदभावात्। तस्मात् तत्पिण्डड्ड्त्ध्;स्मरणसहायमेतत्पिण्डड्ड्त्ध्;वर्तिसादृश्यज्ञानमेव तथाविधं ज्ञानमुत्पादयदुपमानं प्रमाणमिति। इ्कु.3.351ट एतदपि नास्ति- साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते। अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम्।।9।। यदा हि एतद्विसदृशोऽसौ इति प्रत्येति, तत्रापि तुल्यमेतत्। न हि तत् प्रत्यक्षम्, असन्निकृष्टविषयत्वात्। न स्मरणम्, विशिष्टस्याननुभवात्। नोपमानम् असादृश्यविषयत्वात्। ननु- एतद्धर्माभावविशिष्टत्वमेव तस्य वैधर्म्यम्, तच्चाभावगम्यमेवेष्यते। न च प्रकृतेऽप#ि तथाऽस्तु, सादृश्यस्य भावरूपत्वादिति चेत्- न- इतो व्यावृत्तधर्मविशिष्टताया अपि वैधर्म्यरूपत्वात्; तस्य च भावरूपत्वात्। स्यादेतत्- तद्धर्मा इह न सन्तीत्यवगते, अर्थादापद्यते- इहाविद्यमानास्तत्र सन्तीति। न हि तद्विधर्मत्वमेतस्योपपद्यते, यद्येतद्विधर्माऽस#ौ न भवति इति चेत्- एवं तर्हि प्रकृतमप्यर्थापत्तिरेव। न हि तत्सादृश्यविशिष्टत्वमेतस्य प्रत्यक्षसिद्धमपि तस्यैतत्सादृश्यविशिष्टत्वं विनोपपद्यते। इ्कु.3.352ट एतेन दृष्टा(189)सन्निकृष्टप्रत्यभिज्ञानं व्याख्यातम्। तत्रापि तद्धर्मशालित्वं तस्य स्मरणाभिव्यक्तमनुपपद्यमानं तदिदन्तास्पदस्यैकतां व्यवस्थापयति। तस्मान्नोपमानमधिकमिति। इ्कु.3.353ट एवं प्राप्तेऽभिधीयते- सम्बन्धस्य परिच्छेदः (190)(दं?) सञ्ज्ञायास्सञ्ज्ञिना सह। प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः।।10।। यथा गौस्तथा गवयः इति श्रुतातिदेशवाक्यस्य, गोसदृशं पिण्डड्ड्त्ध्;मनुभवतः, स्मरतश्च वाक्यार्थं अयमसौ गवयशब्दवाच्य इति भवति मतिः। सेयं न तावत् वाक्यमात्रफलम्, अनुपलब्धपिण्डड्ड्त्ध्;स्यापि प्रसङ्गात्। नापि प्रत्यक्षफलम्, अश्रुतवाक्यस्यापि प्रसङ्गात्। नापि समाहारफलम्, वाक#्यप्रत्यक्षयोर्भिन्नकालत्वात्। वाक्यतदर्थयोः स्मृतिद्वारोपनीतावपि गवयपिण्डड्ड्त्ध्;सम्बद्धेनापीन्द्रियेण तद्गतसादृश्यानुपलम्भे समयपरिच्छेदासिद्धेः। फलसमाहारे तु तदन्तर्भावे अनुमानादेरपि प्रत्यक्षत्वप्रसङ्गः। तत् किं तत्फलस्य तत्प्रमाणबहिर्भाव एव? अन्तर्भावे वा कियती सीमा?- तत्तदसाधारणेन्द्रियादिसाहित्यम्। अस्ति तर्हि सादृश्यादिज्ञानकालेविष्फारितस्य चक्षुषो व्यापारः- न- उपलब्धगोसादृश्यविशिष्टगवयपिण्डड्ड्त्ध्;स्य वाक्यतदर्थस्मृतिमतः कालान्तरेऽप्यनुसन्धानबलात् समयपरिच्छेदोपपत्तेः। इ्कु.3.354ट ननु च वाक्यादेवानेन समयः परिच्छिन्नः, गोसदृशस्य गवयशब्दस्सञ्ज्ञेति। केवलमिदानीं प्रत्यभिजानाति अयमसाविति। प्रयोगाद्वाऽनुमितः, यो यत्रासति वृत्त्यन्तरे वृद्धैः प्रयुज्यते, स तस्य वाचकः, यथा गोशब्द एव गोः, प्रयुज्यते चायं गोसदृशे इति किमुपमानेनेति- न- सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः। समयो दुर्गृहः पूर्वं शब्देनानुमयाऽपि वा।।11।। न हि गवयशब्दस्य सादृश्यं प्रवृत्तिनिमित्तम्, अप्रतीतगूनामव्यवहारप्रसङ्गात्। नचोभयमपि निमित्तम्, स्वयंप्रतीतसमयसङ्क्रान्तयेऽतिदेशवाक्यप्रयोगानुपपत्तेः। गवयत्वे ह्ययं व्युत्पन्नो वृद्धव्यवहारात्, न सादृश्ये। कथमेतन्निर्धारणीयमिति चेत्- वस्तुगतिस्तावदियम्, तदापाततस्सन्देहेऽपि न फलसिद्धिः, गन्धवत्त्वमिव पृथिवीत्वस्य, गोसादृश्यं गवयशब्दप्रवृत्तिनिमित्तस्योपलक्षणम्, इदमेव वा निमित्तमित्यनिर्धारणात्। इ्कु.3.355ट स्यादेतत्- पूर्वं निमित्तानुपलब्धेर्न फलसिद्धिः, इदानीन्तु तस्मिन्नुपलब्धे तदेव वाक्यं स्मृतिसमारूढं फलिष्यति, अध्ययनसमयगृहीत इव वेदराशिरङ्गोपाङ्गपर्यवदातस्य कालान्तरे। न च वाच्यम्, वाक्येन (191) स्वार्थस्य प्रागेव बोधितत्वात् प्रागेवपर्यवसितम#िति- गोसादृश्यस्योपलक्षणनिमित्तत्वयोरन्यतरत्र तात्पर्ये सन्देहात्। इदानीन्तु गवयत्वेऽवगते तर्कपुरस्कारात्सादृश्यस्योपलक्षणतायां व्यवस्थितायाम्, गङ्गायां घोष इतिवदन्वयप्रतिपत्तिरिति चेत्- न- श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति। पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः।।12।। गोसदृशो गवयशब्दवाच्य इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ विशेषसन्देहेऽपि वाक्यस्य पर्यवसितत्वेन मानान्तरोपनीतानपेक्षणात्, तत्कारकसन्देहेऽपि घटो भवतीति वाक्यवत्। अन्यथा वाक्यभेददोषात्। न च गङ्गायां घोष इतिवत् पदार्था एवान्वयायोग्याः, येन प्रमाणान्तर#ोपनीतेनाऽन्वयस्स्यात्। अथ (192)प्रतीतवाक्यार्थबलायातोऽप्यर्थो यदि वाक्यस्यैव, दिवाभोजननिषेधवाक्यस्यापि रात्रिभोजनमर्थस्स्यात्। तस्माद्यथा गवयशब्दः कस्यचिद्वाचकः शिष्टप्रयोगादिति सामान्यतो निश्चितेऽपि, विशेषे मानान्तरापेक्षा, तथा गोसदृशस्य गवयशब्दो वाचक इति वाक्यान्निश्चितेपि सामान्ये, विशेषवाचकत्वेऽस्य मानान्तरमनुसरणीयमिति। इ्कु.3.356ट अस्त्वनुमानम्। तथाहि- गवयशब्दो गवयस्य वाचकः असति वृत्त्यन्तरेऽभियुक्तैस्तत्र प्रयुज्यमानत्वत्,गवि गोशब्दवदिति चेत्- न- असिद्धेः। न ह्यसति वृत्त्यन्तरे तद्विषयतया प्रयोगस्सङ्गतिमविज्ञाय ज्ञातुं शक्यते। सामानाधिकरण्यादिति चेन्न- पिण्डड्ड्त्ध्;मात्रे सिद#्धसाधनात्, निमित्ते चासिद्धेः, सादृश्यस्यानिमित्तत्वादित्युक्तम्। इ्कु.3.357ट ननु व्याप्तिपरमिदं वाक्यं स्यात्, यो गोसदृशः स गवयपदार्थ इति। तथाच वाक्यादवगतप्रतिबन्धोऽनुमिनुयात्- अयमसौ गवयो गोसदृशत्वादितिदेशवाक्यावगतपिण्डड्ड्त्ध्;वदिति- न- विपर्ययात्। न हि गोसदृशं बुद्धावारोप्यानेन पृष्टः, स किं शब्दवाच्य इति। किन्तु सामान्यतो गवयपदार्थमवगम्य स कीदृगिति। तथाच यद्योगप्राथम्याभ्यां तस्यैव व्याप्यत्वम्। ततः किं तेन, प्रकृतानुपयोगात्। इ्कु.3.358ट अथ (193)किंलक्षणकोऽसाविति प्रश्नार्थः। तदा व्यतिरेकिपरं (194)स्यात्, लक्षणस्य तथाभवात्। तथाच गोसदृशो गवय इत्यस्यार्थः- यो गवय इति न व्यवह्रियते नाऽसौ गोसदृश इति।

एवञ्च प्रयोक्तव्यम्- अयमसौ गवय इति व्यवहर्तव्यः गोसदृशत्वात्, यस्तु न तथा, गोसद#ृशः यथा हस्ती। न च हस्त्यादीनां विपक्षत्वे प्रमाणमस्ति, सर्वाप्रयोगस्य दुरवधार(ण)त्वात्; कतिपयाव्यवहारस्य चानैकान्तिकत्वात्। ङ्कु.3.359ट ननु लिङ्गमात्रे प्रश्नो भविष्यति, कीदृक् किं लिङ्गमिति- न- न ह्यनेन लिङ्गमविज्ञाय गवयशब्दस्य वाचकत्वं कस्यचिद्वाच्यत्वं वाऽवगतम्, येन तदर्थं प्रश्नस्स्यात्। प्रवृत्तिनिमित्तविशेषलिङ्गे प्रश्नः, येन निमित्तेन गवयशब्दः प्रवर्तते तस्य किं लिङ्गम#िति चेन्न- न हि तदवश्यमनुमेयमेवेत्यनेन निश्चितम्, यत इदं स्यात्। ज्ञानोपायमात्रप्रश्ने तद्विशेषेणोत्तरमिति चेन्न- अविशेषादिन्द्रियसन्निकर्षमप्युत्तरयेत्; पर्यायान्तरं वा। यथा- गवयमहं कथं जानीयामिति प्रश्ने, वनं गतो द्रक्ष्यसीति; यथा वा- कः पिक इत्यत्र, क#ोकिल इति। तस्मान्निमित्तभेदप्रश्न एवायम्, गवयो गवयपदवाच्यः कीदृक् केन निमित्तेनेति युक्तमुत्पश्यामः। तस्य च निमित्तविशेषस्य साक्षादुपदर्शयितुमशक्यत्वात् पृष्टस्तदुलक्षणं किञ्चिदाचष्टे। तच्चोपमानसामग्रीसमुत्थापनमेव। तस्य च प्रमाणस्य सतस्तर्कस्सहायतामापद्यते- "सादृश्यस्यैव निमित्ततायां कल्पनागौरवम्, निमित्तान्तरकल्पने च क्लृप्तकल्प्यविरोध' इति तदेव निमित्तमवगच्छतीति। ङ्कु.3.360ट लक्षणन्त्वस्य अनवगतसङ्गतिसञ्ज्ञासमभिव्याहृतवाक्यार्थस्य सञ्ज्ञिन्यनुसन्धानमुपमानम्। वाक्यार्थश्च क्वचित् साधर्म्यं क्वचिद्वैधर्म्यम्। अतो नाव्यापकम्। तस्मान्नियतविषयत्वादेव न तेन बाधः, न त्वनतिरेकादिति स्थितिः। कु.3.ङ्क361टशब्दोऽपि न बाधकमनुमानानतिरेकादिति वैशेषिकादयः। तथा हि- यद्यपि एते पदार्था मिथः संसर्गवन्तः वाक्यत्वादिति व्यधिकरणम्; पदार्थत्वादिति चानैकान्तिकम्; पदैस्स्मारितत्वादित्यपि तथा। यद्यपि चैतानि पदानि स्मारितार्थसंसर्गवन्ति तत्स्मारकत्वादित्यादौ स#ाध्याभावः। न ह्यत्र मत्वर्थः संयोगः समवायस्तादात्म्यं विशेषणविशेष्यभावो वा सम्भवति। ज्ञाप्यज्ञापकभावस्तु स्वातन्त्र्येण अनुमानान्तर्भाववादिभिर्नेष्यते। न च लिङ्गतया ज्ञापकत्वं यत् लिङ्गस्य (195) विषयस्तदेव तस्य, परस्पराश्रयप्रसङ्गात्। तदुपलम्भे हि व्याप्तिसिद्धिस्तत्सिद्धौ च तदनुमानमिति। तथापि- आकाङ्क्षादिमद्भिः पदैः स्मारितत्वात् गामभ्याजेति पदार्थवदिति स्यात्। न च विशेषासिद्धिर्दोषः, संसर्गस्य संसृज्यमानविशेषादेव विशिष्टत्वात्। यद्वा एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्त्वे सति तत्स्मारकत्वात् गामभ्याजेति पदवत्। न चैवमर्थासिद्धिः, ज्ञानावच्छेदकतयैव तत्सिद्धेः। तस्य च संसृज्यमानोपहितस्यैवावच्छेदकत्वान्न विशेषाप्रतिलम्भ इति। ङ्कु.3.362ट अत्रोच्यते- अनेकान्तः परिच्छेदे सम्भवे च न निश्चयः। आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना।।13।। एते पदार्थामिथस्संसर्गवन्त इति संसृष्टा एवेति नियमो वा साध्यः सम्भावितसंसर्गा इति वा। ङ्कु.3.363ट न प्रथमः, अनाप्तोक्तपदकदम्बस्मारितैरनेकान्तात्। आप्तोक्त्या विशेषणीयमिति चेन्न- वाक्यार्थप्रतीतेः प्राक् तदसिद्धेः। न ह्यविप्रलम्भकत्वमात्रमिहाप्तशब्देन विवक्षितम्, तदुक्तेरपि पदार्थसंसर्गव्यभिचारात्। अपितु तदनुभवप्रामाण्यमपि। न चैतच्छक्यम् (196)असर्वज्ञे सर्वदा सर्वविषये सत्यज्ञानवानयमिति निश्चेतुम्, भ्रान्तेः पुरुषधर्मत्वात्। यत्र (197)क्वचिदाप्तत्वमनाप्तस्याप्यस्तीति न तेनोपयोगः। ततोऽस्मिन्नर्थेऽयमभ्रान्त इति केनचिदुपायेन ग्राह्यम्। नचैतत् संसर्गविशेषमप्रतीत्य शक्यम्; बुद्धेरर्थभेदमन्तर#ेण निरूपयितुमशक्यत्वात्। पदार्थमात्रे चाभ्रान्तत्वसिद्धौ न किञ्चित्; अनाप्तसाधारण्यात्। एतेषां संसर्गेऽयमभ्रान्त इति शक्यमिति चेन्न- एतेषां संसर्गे इत्यस्या एव बुद्धेरसिद्धेः। अननुभूतचरे स्मरणायोगात्, तदनुभवस्य लिङ्गाधीनतया तस्य च विशेषणासिद्धत्वेनानुपपत्तेरिति। ङ्कु.3.364ट नापि द्वितीयः, योग्यतामात्रसिद्धावपि संसर्गानिश्चयात्, वाक्यस्य च तदेकफलत्वात्। योग्यतामात्रस्य प्रागेव सिद्धेः। अन्यथा तदसिद्धावासन्नसाकाङ्क्षपदस्मारितत्वादित्येव हेतुस्स्यात्। तथाचाग्निना सिञ्चेदित्यादिना स्मारितैरनैकान्तः; तथाविधानां सर्वथा संसर्गायोग्यत्वादिति। ङ्कु.3.365ट एवं द्वितीयेऽपि प्रयोगे हेतुराकाङ्क्षादिमत्त्वे सतीति। तत्र केयमाकाङ्क्षा नाम? न तावद्विशेषणविशेष्यभावः, तस्य संसर्ग(र्गविशेष)स्वभावतया साध्यत्वात्। नापि तद्योग्यता, योग्यतयैव गतार्थत्वात्। नाप्यविनाभावः, नीलं सरोजमित्यादौ तदभावेऽपि वाक्यार्थप्रत्ययात्। तत्राऽपि विशेषाक्षिप्तसामान्ययोरविनाभावोऽस्तीति (वोप्याकाङ्क्षेति) चेन्न- अहो विमलं जलं नद्याः, कच्छे महिषश्चरतीत्यादौ वाक्यभेदानुपपत्तिप्रसङ्गात्। नापि प्रतिपत्तुर्जिज्ञासा, पटो भवतीत्यादौ शुक्लादिजिज्ञासायां (सया)रक्तः पटो भवतीत्यस्यैकदेशवत् सर्वदा वाक्यापर्यवसानप्रसङ्गात्। "गुणक्रियाद्यशेषविशेषजिज्ञासायामपि पदस्मारितविशेषजिज्ञासा आकाङ्क्षा। पट इत्युक्ते किंरूपः, कुत्र किं करोतीत्यादिरूपजिज्ञासा। तत्र, भवतीत्युक्ते, किं करोतीत्येषैव पदस्मारितविषया, न तु किं रूप इत्यादिरपि। यदा तु रक्त इत्युच्यते, तदा किंरूप इत्येषाऽपि स्मारितविषया स्यात् इति न किञ्चिदनुपपन्न'मिति चेत्- एवं तर्हि चक्षुषी निमील्य परिभावयतु भवान्, किमस्यां जातायामन्वयप्रत्ययः अथ ज्ञातायामिति। तत्र प्रथमे नानया व्यभिचारव्यावर्तनाय (वारणाय)हेतुर्विशेषणीयः, मनस्संयोगादिवत्सत्तामात्रेणोपयोगात्। आसत्तियोग्यतामात्रेण विशिष्टस्तु निश्चितोऽपि न गमकः; अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ व्यभिचारात्। ङ्कु.3.366ट द्वितीयस्तु स्यादपि, यद्यनुमानान्तरवत्तत्सद्भावेऽपि तज्ज्ञानवैधुर्यादन्वयप्रत्ययो न जायते। नत्वेतदस्ति, आसत्तियोग्यतामात्रप्रतिसन्धानादेव साकाङ्क्षस्य सर्वत्र वाक्यार्थप्रत्ययात्। निवृत्ताकाङ्क्षस्य च तदभावात्। कथमेष निश्चयः, साकाङ्क्ष एव प्रत्येति, न तु ज्ञाताकाङ्क्ष इति चेत्- तावन्मात्रेणोपपत्तावनुपलभ्यमानज्ञानकल्पनाऽनुपपत्तेः। अन्यत्र तथा दर्शनाच्च। यथा (दा) हि दूराद्दृष्टसामान्यो जिज्ञासते कोऽयमिति, प्रत्यासीदंश्च, स्थाणुरयमिति प्रत्येति, तदाऽस्य ज्ञातुमहमिच्छामीत्यनुव्यवसायाभावेऽपिस्थाणुरयमित्यर्थ(न्वय)प्रत्ययो भवति- तथेहाप्यविशेषात् विशेषोपस्थानकाले संसर्गावगतिरेव जायते, न तु जिज्ञासावगतिरिति। न च विशेषोपस्थानात्प्रागेव जिज्ञासावगतिः प्रकृतोपयोगिनी, तावन्मात्रस्यानाकाङ्क्षा(ङ्क्ष)त्वात्। ङ्कु.3.367ट न चैवम्भूतोऽप्ययमैकान्तिको हेतुः। यदा ह्ययमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामिति वक्तोच्चारयति, श्रोता च व्यासङ्गादिना निमित्तेन अयमेति पुत्र इत्यश्रुत्वैव; राज्ञः पुरुषोऽपसार्यतामिति श्रृणोति, तदाऽस्त्याकाङ्क्षादिमत्त्वे सति पदकदम्बकत्वम्? न च स्मारितार्थसंसर्गज्ञानपूर्वकत्वमिति। ङ्कु.3.368ट स्यादेतत्- यावत्समभिव्याहृतत्वेन विशेषिते हेतौ नायं दोषः, तथाविधस्य व्यभिचारोदाहरणासंस्पर्शात्। कुतस्त्यस्तर्हि कतिपयपदश्राविणः संसर्गप्रत्ययः? अलिङ्ग एव लिङ्गत्वाध्यारोपात्। एतावानेवायं समभिव्याहार इति तत्र श्रोतुरभिमानः- न- तत्सन्देहेऽपि श्रुतानुरूपसंसर्गावगमात्। भवति हि तत्र प्रत्ययः, न जाने किमपरमनेनोक्तम्, एतावदेव श्रुतम्, यद्राज्ञः पुरुषोऽपसार्यतामिति। भ्रान्तिरसाविति चेत्- न तावदसौ दुष्टेन्द्रियजा, परोक्षाकारत्वात्। न लिङ्गाभासजा, लिङ्गाभिमानाभावेऽपि जायमानत्वात्। एतावत्प(त्क्प)दकदम#्बप्रतिसन्धानमेव तां जनयतीति चेत्। यद्येवम्, तदेवादुष्टं

सदभ्रांन्त जनयत् केन वारणीयम्। व्याप्तिप्रतिसन्धानं विनाऽपि तस्य संसर्गप्रत्यायने सामथ्र्यावधारणात् चक्षुरादिवत्। इ्कु.3.369ट नास्त्येव तत्र संसर्गप्रत्ययः; असंसर्गाग्रहमात्रेण तु तथा व्यवहार इति चेत्- तर्हि यावत्समभिव्याहारेणापि विशेषणेनाप्रतीकारः, तथाभूतस्यानाप्तवाक्यस्य संसर्गज्ञानपूर्वकत्वाभावात्। असंसर्गाग्रहपूर्वकत्वमात्रे साध्ये न व्यभिचार इति चेत्- एवं तर्हिसंसर्गो न सिद्ध्येत्। आप्तवाक्येषु सेत्स्यतीति चेन्न- सर्वविषयाऽऽप्तत्वस्यासिद्धेः, यत्र क्वचिदाप्तत्वस्यानैकान्तिकत्वात्, प्रकृतविषये चाप्तत्वसिद्धौ संसर्गविशेषस्य प्रागेव सिद्ध्यभ्युपगमादित्युक्तम्। इ्कु.3.370ट न च सर्वत्र जिज्ञासा निबन्धनम्, अजिज्ञासोरपि वाक्यार्थप्रत्ययात्। आकाङ्क्षापदार्थस्तर्हि कः? जिज्ञासां प्रति योग्यता। सा च स्मा(198)रिततदाक्षिप्तयोर(प्ता)विनाभावे सति श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावः। न चैषोऽपि ज्ञानमपेक्षते, (199)प्रतिय#ोगिनिरूपणाधीननिरूपणत्वात्तदभावस्य, तस्य च विषयनिरूप्यत्वादिति। इ्कु.3.371ट प्राभाकरस्तु लोकवेदसाधारणव्युत्पत्तिबलेनान्विताभिधानं प्रसाध्य वेदस्यापौरुषेयतया वक्तृज्ञानानुमानानवकाशात् संसर्गे शब्दस्यैव स्वातन्त्र्येण प्रामाण्यमास्थिषत; लोके त्वनुमानत एव वक्तृज्ञानोपसर्जनतया संसर्गस्य सिद्धेरन्विताभिधानबलायातेपि प्रतिपादकत्वेऽनुवादकतामात्रं वाक्यस्येति निर्णीतन्तः। तददितस्थवीयः- निर्णीतशक्तेर्वाक्यस्याद्धि प्रागेवार्थस्य निर्णये। व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता।।14।। यावती हि वेदे सामग्री, तावत्येव लोकेऽपि भवन्ती कथमिव नार्थं गमयेत्। नह्यपेक्षणीयान्तरमस्ति। लिङ्गे तु परिपूर्णेऽप्यवगते व्याप्तिस्मृतिरपेक्षणीयाऽस्तीति, विलम्बेन किं निर्णेयम्; अन्वय(अर्थ)स्य प्रागेव प्रतीतेः। इ्कु.3.372ट लोके वक्तुराप्तत्वनिश्चयोऽपेक्षणीय इति चेन्न- तद्रहितस्यापि स्वार्थप्रत्यायने शब्दस्य शक्तेरवधारणात्। अन्यथा वेदेऽप्यर्थप्रत्ययो न स्यात्, तदभावात्। न च लोके अन्यान्येव पदानि; येन शक्तिवैचित्र्यं स्यात्। अनाप्तोक्तौ व्यभिचारदर्शनात् तुल्याऽपि सामग्री सन्देहेन शिथिलायते इति चेन्न- चक्षुरादौ व्यभिचारदर्शनेन (रसत्वेन) शङ्कायामपि सत्यां ज्ञानसामग्रीतस्तदुत्पत्तिदर्शनात्। ज्ञायमानस्यायं विधिः, यत् सन्देहे सति न निश्चायकम्,(200) यथा लिङ्गम्; चक्षुरादि तु सत्तयेति चेन्न- वाक्यस्य निश्चतत्वात्; आप#्तोक्तत्वस्य चार्थप्रत्ययं प्रत्यनङ्गत्वात्। लोकेऽपि चाप्तत्वानिश्चयेऽपि वाक्यार्थप्रतीतेः। भवति हि वेदानुकारेण पठ¬मानेषु अपौरुषेयत्वाभिमानिनो गौडङ्डत्ध्;(201)मीमांसकस्यार्थनिश्चयः। न चासौ (चायं) भ्रान्तिः, पौरुषेयत्वनिश्चयदशायामपि तथानिश्चया(थात्वा)दिति। इ्कु.3.373ट स्यादेतत्- नाप्तोक्तत्वमर्थप्रतीतेरङ्गमिति ब्रूमः; किन्त्वनाप्तोक्तत्वशङ्कानिरासः (सम्)। स च क्वचिदपौरुषेयत्वनिश्चयात्, क्वचिदाप्तोक्तत्वावधारणादिति चेत्- तत् किमपौरुषेयत्वस्याप्रतीतौ, सन्देहे वा वेदवाक्याद्विदितपदार्थसङ्गतेरर्थप्रत्यय एव न भव#ेत्, भवन्नपि वा न श्रद्धेयः? प्रथमे सत्यादय एव प्रमाणम्। नचासंसर्गाग्रहे तदानीं संसर्गव्यवहारः, बाधकस्यात्यन्तमभावात्। तथापि तत्कल्पनायामन्वयोच्छेदप्रसङ्गात्। द्वितीये त्वश्रद्धा प्रत्यक्षवत् निमित्तान्तरान्निवर्त्स्यतीति वेदे यदि, लोकेऽपि तथा स्यादविशेषात्। इ्कु.3.374ट अन्यथा वेदस्याप्यनुवाकताप्रसङ्गः (ङ्गात्)। तदुच्यते। (थाहि)। व्यस्तपुम्दूषणाशङ्कैः स्मारितत्वात् पदैरमी। अन्विता इति निर्णीते वेदस्यापि न तत् कुतः।। 15।। यदा ह्यपौरुषेयत्वनिश्चयात् प्राक् वेदो न किञ्चिदभिधत्ते इति पक्षः,तदा आप्तोक्तत्वनिश्चयोत्तरकालं (202)लोकवत्, वेदेऽप्यपौरुषेयत्वनिश्चयात् पश्चादनुमानावतारः। इयांस्तु विशेषः- यदत्र पदार्थानेव पक्षीकृत्य निरस्तपुम्दोषाशङ्कैराकाङ्क्षादिमद्भिः पदैः स्मारितत्वादाप्तोक्तपदकदम्बकस्मारितपदार्थवत् संसर्ग एवाहत्य साध्यः,बुद्धिव्यवहितस्त्वितरत्रेति। फलतो न कश्चिद्विशेष इति । तथा चान्विताभिधानेऽपि जघन्यत्वाद्वेदस्यानुवादकत्वप्रसङ्गः। न चैवं सति तत्र प्रमाणमस्ति। विशिष्टप्रतिपत्त्यन्यथानुपपत्या हि शब्दस्य तत्र शक्तिः परिकल्पनीया। सा चानुमानेनैवोपपन्नेति वृथा प्रयासः। तस्माल्लोके शब्दस्यानुवादकतेति विपरीतकल्पनेयमायुष्मताम्। इ्कु.3.375ट किं चेदमन्विताभिधानं नाम? न तावदन्वितप्रतिपादनमात्रम्, अविवादात्। नापि स्वार्थाभिधायास्तत्र तात्पर्यम्, अविवादादेव। नापि सङ्गतिबलेन तत्प्रतिपादनम्, वाक्यार्थस्यापूर्वत्वात्। नापि स्वार्थसङ्गतिबलेन, तस्य स्वार्थ एवोपक्षयात्। नापि सैव सङ्गतिरुभयप्रतिपादिका, प्रतीतिक्रमानुपपत्तेः। यौगपद्याभ्युपगमे तु योग्यत्वादिप्रतिसन्धानशून्यस्यापि पदार्थप्रत्ययवत् वाक्यार्थप्रत्ययप्रसङ्गात्। नापि सैव सङ्गतिः स्वार्थे निरपेक्षा, वाक्यार्थे तु पदार्थप्रतिपादनावान्तरव्यापारेति युक्तम्- तस्याः स्वयमकरणत्वात्। सङ#्गतानि पदानि हि करणम्, न तु सङ्गतिः। तथापि तत्प्रतिपादनानुगुणसङ्गतिशालीनि पदानीति चेत्- न तावद्वाक्यार्थप्रतिपादनानुगुणता सङ्गरेस्तदाश्रयत्वेन; सामान्यमात्रगोचरत्वात्, तद्वन्मात्रगोचरत्वाद्वा। नापि तदनुगुणव्यापारवत्वेन, अकरणत्वादित्युक्तम्। तदनुगुणकरणव्य#ापारोत्थापकत्वात्तदनुगुणत्वे न नो विवादः। अन्वित एव शक्तिरिति चेत्- उक्तमत्र वाक्यार्थस्यापूर्वत्वात् प्रतीतिक्रमानुपपत्तेश्चेति। इ्कु.3.376ट स्मृतक्रियान्विते कारके स्मृतकारकान्वितायाञ्च क्रियायां सङ्गतिः। अतो नोक्तदोषावकाशः। नापि पर्यायतापत्तिः, प्राधान्येन नियमात्। नापि पौनरुक्त्यम्, विशेषान्वये तात्पर्यात्। नापीतरेतराश्रयत्वम्, स्वार्थस्मृतावनपेक्षणात्। नापिवाक्यभेदापत्तिः, परस्परपदार्थस्मृतिसन्निधौ तदितरानपेक्षणात्- इति चेत्- न अन्विते सङ्गतिग्रह इति कोऽर्थः? यदि यत्र सङ्गतिस्तद्वस्तुगत्या पदार्थान्वितम्, न किञ्चित् प्रकृतोपयोगि। न हि यत्र चक्षुषः सामथ्र्यमवगतं तद्वस्तुगत्या स्पर्शवदिति, तद्वत्ताऽपि तस्य विषयः। अथाऽन्विततयैव तत्र व्युत्पत्तिरित्यर्थः- तदसत्, प्रमाणाभावात्। इ्कु.3.377ट अन्वितार्थप्रतिपत्त्यन्यथानुपपत्तिरिति चेन्न। अनन्विताभिधानेनाप्युपपत्तेः। आकाङ्क्षानुपपत्तिरस्तु। न हि सामान्यतोऽन्वितानवगमेऽन्वयविशेषे जिज्ञासा स्यात्- न- दृष्टे फलविशेषे रसविशेषजिज्ञासावदाक्षेपतोऽप्युपपत्तेः। इ्कु.3.378ट शब्दमहिमानमन्तरेण यतः कुतश्चिदपि स्मृतेषु पदार्थेषु अन्वयप्रतीतिः स्यात्। न चैवम्। ततः शब्दशक्तिरवश्यं कल्पनीयेति चेत्- कुतस्तर्हि कविकाव्यानि विलसन्ति। न हि संसर्गविशेषमप्रतीत्य वाक्यरचना नाम। न च स्वोत्प्रेक्षायां प्रत्यक्षमनुमानं शब्दस्तदाभ#ासा वा सम्भवन्ति, अन्यत्र चन्तावशेन पदार्थस्मरणेभ्यः। असंसर्गाग्रहोऽसाविति चेत्; मम तावत् संसर्गग्रह एवासौ। तवापि सैव पदावली क्वचिदन्वये पर्यवस्यति, क्वचिदनन्वयाग्रहे इति कुतो विशेषात्? इ्कु.3.379ट आप्तानाप्तवक्तृकतयेति चेत्; किं तथाविधेन वक्त्रा तत्र कश्चिद्विशेष आहितः? आहो वक्तैवाच्छेदकतया विशेषः? प्रथमे अभिहितान्वयवादिनामिव तवापि शक्तिकल्पनागौरवम्। द्वितीये तु वक्तुरिव पदानामप्यवच्छेदकतयैव विशेषकत्वमस्तु। एवं तर्हि पदानामप्यन्वयप्रतीत#ावस्त्युपयोगः। कस्सन्देहः। परं पदार्थाभिधानेन; न त्वन्यथा। यथा तवैव, आप्तस्य संसर्गपरतया पदसमभिव्याहारमात्रेण; न त्वन्यथा। अन्यथा गुरुमतविदामेव श्लोक आप्तपदप्रक्षेपेण पठनीयः- प्राथम्यादभिधातृत्वात् तात्पर्योपगमादपि। आप्तानामेव सा शक्तिर्वरमभ्युपगम्यताम्।।इति।। इ्कु.3.380ट तस्मात् प्रकारान्तरेण संसर्गप्रत्ययो भवतु मा वा,

पदार्थानामाकाङ्क्षादिमत्त्वे सति अभिहितानामवश्यमन्वय इति कुतोऽतिप्रसङ्गः? झ्कु.3.381ट न चैवं सति पदार्था एव करणम्, तेषामनागतादिरूपतया कारकत्वानुपपत्तौ तद्विशेषस्य करणत्वस्यायोगात्। तत्संसर्गे प्रमाणान्तरासङ्कीर्णोदाहरणाभावाच्च। पदानां तु पूर्वभावनियमेन पदार्थस्मरणावान्तरव्यापारवत्तया तदुपपत्तेः; व्यापारस्याव्यवधायकत्वादिति कृतं प्रसक्तानुप्रसक्त्या। झ्कु.3.382ट अस्तु तर्हि शब्द एव बाधकं सर्वज्ञे कर्तरि। तथाहि- प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते।। (गी.) इत्यादि पठन्ति। अस्यायमर्थः- न पारमार्थिकं चेतनस्य कर्तृत्वमस्ति। आभिमानिकं तु तत्। न च सर्वज्ञस्याभिमानः। न चासर्वज्ञस्य जगत्कर्तृत्वमस्ति- उच्यते- न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता। अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः।।16।। यदि हि सर्वज्ञकत्रभावाऽऽवेदकः शब्दो नाप्तोक्तः, न तर्हि प्रमाणम्। अथाप्तोऽस्य वक्ता, कथं न तदर्थदर्शी। अतीन्द्रियार्थदर्शीति चेत्- कथमसर्वज्ञः, कथं वा न कर्ता, आगमस्यैव प्रणयनात्। न च नित्यागमसम्भवः, विच्छेदादित्यावेदितम्। झ्कु.3.383ट अपिच- न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात्। निरञ्जनावबोधार्थो न च सन्नपि तत्परः।।17।। नह्यसत्त्वपक्ष एवागमो नियतः, ई॑ारसद्भावस्यैव भूयस्सु प्रदेशेषु प्रतिपादनात्। तथाचाग्रे दर्शयिष्यामः। तथाच सति क्वचिदसत्त्वप्रतिपादनमनेकान्तं न बाधकम्। सत्त्वप्रतिपादनमपि तर्हि न साधनमिति चेत्- आपाततस्तावदेवमेतत्। यदा तु निःशेषविशेषगुणशून्यात्मस्वरूपप्रतिपादनार्थत्वमकर्तृकत्वागमानामवधारयिष्यते तदा न तन्निषेधे तात्पर्यममीषामिति सत्त्वप्रतिपादकानामेवागमानां प्रामाण्यं भविष्यतीति। न च तेषामप्यन्यत्र तात्पर्यमिति वक्ष्यामः। झ्कु.3.384ट अस्त्वर्थापत्तिस्तर्हि बाधिका। तथाहि- यद्यभविष्यत्, नोपादेक्ष्यत्। न ह्यसावनुपदिश्य प्रवर्तयितुं न जानाति। अत उपदेश एवान्यथानुपपद्यमानस्तथाविधस्याभावमौदासीन्यं वाऽऽवेदयति- न- अन्यथैवोपपत्तेः। हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा। तदभावात् प्रवृत्तिर्नो कर्मवादेऽप्ययं विधिः।।18।। बुद्धिपूर्वा हि प्रवृत्तिर्न बुद्धिमनुत्पाद्य शक्यसम्पादना। न च प्रकृते बुद्धिरप्युपदेशमन्तरेण शक्यसिद्धिः, तस्यैव तत्कारणत्वात्। भूतावेशन्यायेन प्रवर्तयेदिति चेत्- प्रवर्तयेदेव, यदि तथा फलसिद्धिः स्यात्। न त्वेवम्। कुत एतदवसितम्? उपदेशान्यथानुपपत#्त्यैव। यस्यापि मते अदृष्टवशादेव भूतानां प्रवृत्तिः, तस्यापि तुल्यमेतत्। यद्यस्ति प्रवृत्तिनिमित्तमदृष्टम्, किमुपदेशेन, तत एव प्रवृत्तिसिद्धेः। न चेत्, तथापि किमुपदेशेन, तदभावे तस्मिन् सत्यप्यप्रवृत्तेः। नित्यः स्वतन्त्र उपदेशो न पर्यनुयोज्य इति चेत्- यूयं पर्यनुयोज्याः, ये तम(मन)वधानतो धारयन्ति विचारयन्ति चेति। झ्कु.3.385ट न चार्थापत्तिरनुमानतो भिद्यते, लोके तदसङ्कीर्णोदाहरणाभावात् प्रकारान्तराभावाच्च। तथाहि- अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः। न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः।।19।। जीवंश्चैत्रो गृहे नास्तीति अनुपपद्यमानमसति बहिःसद्भावे, तमाप(मावे)दयतीत्युदहरन्ति। तत्र चिन्त्यते- किमनुपपन्नं जीवतो गृहाभावस्येति। न ह्यनियमयस्यानियामकं विना किञ्चिदनुपपन्नम्, अतिप्रसङ्गात्। ननु स्वरूपमेव। तत् न तावद्बहिः सत्त्वेन कर्तव्यम्, तदकार्यत्वात् तस्य। स्थितिरेवास्य तेन विना न स्यादित्यस्य स्वभाव इति चेत्- एवं तर्हि तन्नियतस्वभाव एवासौ; व्याप्तेरेव व्यतिरेकमुखनिरूप्यायास्तथाव्यपदेशात्। झ्कु.3.386ट कथं वा (च) बहिःसत्त्वमस्योपपादकम्? न हि अनियामको भवन्नप्यनियम्यमुपपादयति, अतिप्रसङ्गादेव। स्वभावोऽस्य, यदनेन बहिःसत्त्वेन गेहासत्वं क्रोडड्डत्ध;ीकृत्य स्थातव्यमिति चेत्- सेयं व्याप्तिरेवान्वयमुखनिरूप्या तथा व्यपदिश्यते इति। झ्कु.3.387ट न वयमविनाभावमर्थापत्तावपजानीमहे, किन्तु तज्ज्ञानम्। न चासौ सत्ता मात्रेण तदनुमानत्वमापादयतीति चेत्- न- अनुपपत्तिप्रतिसन्धानस्यावश्याभ्युपगन्तव्यत्वात्। अन्यथात्वतिप्रसङ्गात्। अर्थापत्त्याभासानवकाशाच्च। यदा ह्यन्यथैवो(थाप्यु)पपन्नमन्यथाऽनुपपन्नमिति मन्यते, तदाऽस्य विपर्ययः, न त्वन्यथेति। झ्कु.3.388ट तथापि कथमत्र व्याप्तिर्गृह्येतेति चेत्- यदाऽहमिह तदा नान्यत्र, यदान्यत्र तदा नेहेति सर्वप्रत्यक्षासिद्धमेतत्; का तत्रापि कथन्ता? सर्वदेशाप्रत्यक्षत्वे तत्राभावो दुरवधारण इत्यपि नास्ति, तेषामेव संसर्गस्यात्मनि प्रतिषेधात्। अयोग्यानां प्रतिषेधे का वार्तेति चेत्- तदवयवानां तत्संसर्गप्रतिषेधादेवानुमानात्; अन्येषां न काचित्। न ह्यकारणीभूतेन परमाणुना नेदं संसृष्टमिति निश्चेतुं शक्यमिति। झ्कु.3.389ट न चा(नाप्य)विनाभावनिश्चयेनापि गमयन्नपक्षधर्मोऽर्थापत्तिरिति युक्तम्- पक्षधर्मताया अनिमित्तत्वप्रसङ्गात्; अविशेषात्। व्यधिकरणेनाविनाभावनिश्चयायोगाच्च; यत् (203) यत्र यदेति प्रकारानुपपत्तेः। झ्कु.3.390ट प्रमाणयोर्विरोधे अर्थापत्तिरविरोधोपपादिका, न त्वेवमनुमानमित्यपि नास्ति। विरोधे हि रज्जुसर्पादिवदेकस्य बाध एव स्यात्, न तूभयोः प्रमाण्यम्। प्रामाण्ये वा न विरोधः, स्थूलमिदमेकमितिवत् सहसम्भवात्; चैत्रोऽयमयं तु मैत्र इतिवद्वा विषयभेदात्। प्रकृते क्वाप्यस्तीति सामान्यतो गेहस्यापि प्रवेशादेकविषयताऽप्यस्तीति चेत्- यद्येवम्, क्वचिदस्ति क्वचिन्नास्तीतिवन्न विरोधः। अत्रापि विरोध एवेति चेत्- एकं तर्हि भज्येत। झ्कु.3.391ट न भज्येत, अर्थापत्त्या उभयोरप्युपपादनादिति चेत्- किमनुपपद्यमानम्? विरोध एवान्यथानुपपद्यमानो विभिन्नविषयतया व्यवस्थापयतीति चेत्- अथाभिन्नविषयतयैव किं न व्यवस्थापयेत्। व्यवस्थापनमविरोधापादनम्। एकविषयतयैव चानयोर्विरोधः। स कथं तयैव शमयितव्यः न हि यो यद्विषमूÐच्छतः, स तेनैवोत्थाप्यते इति चेत्- एकविषयतया अनयोर्विरोध इत्येतदेव कुतः। विभिन्नदेशस्वभावतयैव सर्वत्रोपलम्भादिति चेत्- नन्वियं व्याप्तिरेव। तथाच घट्टकुट¬ां (204) प्रभातमिति। झ्कु.3.392ट धूमोपि वानुपपद्यमानतयैव वांॅढद्धङ्डड़14;न गमयेत्। न हि तेन विना असावुपपद्यते। विरोधोऽपि- धूमाद्वढिद्धङ्डड़14;नना भवितव्यम्,अनुपलब्धेश्च न भवितव्यमिति। तथाचानु पलब्धेरर्वाग्भागव्यवस्थापनम्, धूमस्य च व्यवधानेनानुपलभ्यवढिद्धङ्डड़14;नविषयत्वस्थितिरर्थापत्तिरिति कुतोऽनुमानम्। वढिद्धङ्डड़14;नमानयमित्यमनुमानं व्याप्तेः; अन्यथा अनुमानाभावे विरोधासिद्धेः। अर्वाग्भागानुपलब्धिविरोधेन परभागेऽस्य वढिद्धङ्डड़14;नरित्यस्यार्थापत्तिरेवेति चेत्- न- व्याप्ति ग्राहकेण प्रमाणेन विरोधस्योक्तत्वात्। नाप्युत्तरा अर्थापत्तिः। अन्यथा पाण्डड्डत्ध;रत्वस्यापालालत्वविरोधेन पालालत्वस्थितिरप्यर्थापत्तिरेव स्यात्। तद्विशिष्टस्य तेनैव व्याप्तेर्नैवमिति चेत्- यद्येवम्, अर्वाग्भागानुपलभ्यमानवन्हित्वेन (मत्वेन) विशिष्टस्य धूमस्य तेनैव व्याप्तेः कथमेवं भविष्यतीति तुल्यम्। झ्कु.3.393ट केवलव्यतिरेक्यानुमानं पराभिमतमर्थापत्तिः; अन्वयाभावादिति चेत्- एवमेतावता विशेषेणानुमानेऽर्थापत्तिव्यवहारं न वारयामः। तत्रानुमानव्यवहारः कुत इति चेत्- अविनाभूतलिङ्गसमुत्पन्न(मुत्थ)त्वात्। साध्यधर्मेण विना ह्यभवनमन्वयिन इव व्यतिरेकिणोऽप्यविशिष#्टम्, तन्निश्चयश्चाऽन्वयव्यतिरेकाभ्यामन्यतरेण वेति। तस्मादर्थापत्तिरित्यनुमानस्य पर्यायोऽयम्, तद्विशेषवचनं वा

पूर्ववदादिवदिति युक्तम्। ࣇकु.3.394ट अनुपलब्धिस्तु न बाधिकेति चिन्तितम्। न च प्रत्यक्षादेरतिरिच्यते। तदुच्यते- प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात्। अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः।।20।। ࣇकु.3.395ट या हि साक्षात्कारिणी प्रतीतिः, सा इन्द्रियकरणिका, यथा रूपादिप्रतीतिः; तथेह भूतले घटो नास्तीत्यपि। साक्षात्कारित्वमस्या असिद्धमिति चेन्न- एकजातीयत्वे ज्ञाताज्ञातकरणत्वानुपपत्तेः। न हि तस्मिन्नेव कार्ये तदेव करणमेकदा ज्ञातम् अज्ञातञ्चैकदोपयुज्यत#े, लिङ्गेन्द्रिययोरपि व्यत्ययप्रसङ्गात्, ज्ञानस्याकारणत्वप्रसङ्गाच्च। न हि तदतिपत्यापि भवतस्तत्कारणत्वम्,व्याघातात्। तस्मात् ज्ञातानुपलब्धिजन्यस्य साक्षात्कारित्वात् तद्विपरीतकारणकमिदं तद्विपरीतजातीयमिति न्याय्याम्। ननु क्व नाम ज्ञातानुपलब्धिरसाक्षात्कार#िणीमभावप्रतीतिं जनयति? तद्यथा- निपुणतरमनुसृतो मया मन्दिरे चैत्रः; न चोपलब्ध इति श्रुत्या श्रोताऽनुमिनोति, नूनं नासीदेवेति। एतेन प्राङ्नास्तितताऽपि व्याख्याता। ननु तथाप्यवान्तरजातिभेदोऽस्तु; अज्ञातानुपलब्धिजन्ये साक्षात्कारस्तु कुत इति चेत्- कारणविरोधात#् कार्यविरोधेन भवितव्यमित्युक्तमेव। ࣇकु.3.396ट अनन्यत्रोपक्षीणेन्द्रियव्यापारानन्तरभावित्वाच्च। अधिकरणग्रहणे तदुपक्षीणमिति चेन्न- अन्धस्यापि त्वगिन्द्रियोपनीते घटादौ रूपविशेषाभावप्रतीतिप्रसङ्गात्। अस्ति हि तस्याधिकरणग्रहणम्। अस्ति च प्रतियोगिस्मरणम्। अस्ति च श्यामेरक्तत्वस्य योग्यस्याभावो। #ानुपलब्धिश्च। अधिकरणग्राहकेन्द्रियग्राह्याभाववादिनोऽपि समानमेतदिति चेन्न- प्रतियोगिग्राहकेन्द्रियग्राह्योऽभाव इत्यभ्युपगमात्। ममापि प्रतियोगिग्राहकेन्द्रियगृहीतेऽधिकरणे अनुपलब्धिः प्रमाणमित्यभ्युपगम इति चेन्न- वायौ त्वगिन्द्रियोपनीते रूपाभावप्रतीत्यन#ुदयप्रसङ्गात्। तथापि तत्तत्र सन्निकृष्टमिति चेत्- हन्तैवमनन्यत्रचरितार्थमिन्द्रियमवश्यमपेक्षणीयं रूपाभावानुभवेन। ࣇकु.3.397ट स्यादेतत्- तथापि वस्त्वन्तरग्रह एव तस्योपयोग इति चेन्न- तस्य तं प्रत्यकारणत्वात्। कारणत्वे वा महान्धकारे करपरामर्शेन स्पर्शवद्द्रव्याभावं न प्रतीयात्। प्रतीयाच्च पुरोविस्फारिताक्षः पृष्ठलग्नस्याश्यामत्वम्। आर्जवावस्थानमप्यधिकरणस्योपयुज्यते इति चेत्- तर्हि नयनसन्निकर्षोऽप्युपयोक्ष्यते। तदेकसहकारिप्रभासन्निकर्षापेक्षणात्; वातायन(205)विवरविसारिकरपरामृष्टेऽप्यधिकरणे तदुपलम्भप्रसङ्गाच्च। ࣇकु.3.398ट तथापि योग्यतापादनोपक्षीणञ्चक्षुः। तदितर(206)सामग्रीसाकल्ये ह्यनुपलभ्यमानस्याभावो निश्चीयते। तच्च चक्षुष्यधिरकरणसन्निकृष्टे सति स्यादिति चेत्- ननु परिपूर्णानि कारणान्येव साकल्यम्। तथाच किं कुत्रोपक्षीणम्। अथान्योन्यमेलनं (207)मिथः प्रत्यासत्य#ादिशब्दवाच्यं तदुपक्षयविषयः, न तर्हि क्वचिच्चक्षुः कारणं स्यादिति। न हि रूपाद्युपलब्धिमप्यसन्निकृष्टमेतदुपजनयति। ࣇकु.3.399ट अथाधिकरणसमवेतकिञ्चिदुपलम्भोऽपि तद्विषयाभावग्रहेऽनुपलब्धेरपेक्षणीयः। ततस्तत्रेदं चरितार्थम्। वाय्वादिषु तु रूपाद्यभावप्रतीतिरानुमानिकी। तथा(208)नुपलब्ध्या ह्यनुमीयते, अयं नीरूपो वायुरिति- न- असिद्धेः। न ह्युपलम्भाभावो भवतामभावोपलम्भः। उपलम्भस#्यातीन्द्रियत्वाभ्युपगमात्। प्राकट¬ाभावेनानुमेय इति चेन्न- वायौ रूपवत्ताप्राकट¬ाभावस्याप्यसिद्धेः। रूपाभावेन समानत्वात्। व्यवहाराभावेनानुमेय इति चेन्न- कायवाग्व्यापाराभावेऽप्युपेक्षाज्ञानभावाभ्युपगमात्; मूकस्वप्नोपपत्तेश्च। न च व्यवहाराभावमात्रेणानुमातुमपि शक्यते, अनैकान्तिकत्वादसिद्धेश्च। तद्विषयस्तु व्यवहारस्तद्विषयज्ञानजन्यो वा, तद्विषयज्ञानजनको, वा तदाश्रयधर्मजनको वा। तदभावश्च तज्ज्ञानतदाश्रयधर्माभावान्तर्भूत एवेत्यशक्यनिश्चय एव। आत्माश्रयेतरेतराश्रयचक्रकप्रवृत्तिप्रसङ्गात्। ࣇकु.3.400ट न चाज्ञातस्योपलम्भाद्यभावस्य लिङ्गता। न च प्राकट¬ाभावः सत्तामात्रेणोपलम्भाभावमावेदयतीति युक्तम्- लिङ्गाभावस्य तथात्वेऽतिप्रसङ्गात्। अविनाभावबलेन तु नियमे तत्प्रतिसन्धानापत्तेः। न ह्यविनाभावः सत्तामात्रेण ज्ञानहेतुं नियमयति, धूमादावपि तथाभावप#्रसङ्गादिति। ࣇकु.3.401ट ज्ञानप्रत्यक्षत्वेन त्वद्दिशा भविष्यतीति चेन्न- शब्दध्वंसादिनोक्तोत्तरत्वात्। ࣇकु.3.402ट अपिच प्रतियोगिग्राहकेन्द्रियेणाधिकरणधर्मप्रतीतिरनुपलब्धेरङ्गमिति, तद्रहितायास्तस्याः कार्यव्यभिचाराद्व्यवस्थाप्येत, व्याप्तिबलाद्वा (208)। न तावदुक्तरूपानुपलब्धिस्तां विना अभावप्रत्ययमजनयन्ती दृश्यते। नापि व्याप्तेः, तथा सति वयौ रूपाभावप्रत्ययस्तामाक्षिपेत्, एवम्भूतत्वात्। अनाक्षेपे वा,न तत्कारणको भवेत्, न वा भवेत्। ततो न भवत्येव, लिङ्गात्तदुत्पत्ति(209)रिति चेत्- ननु लिङ्गमपि सैव; न तत्त्वान्तरम्। यथा योनिसम्बन्धोऽलिङ्गदशायामिन्द्रियसन्निकर्षमपेक्षते, लिङ्गदशायां तु तदनपेक्ष एव ब्राह्मण्यज्ञाने, तथैतत् स्यादिति चेन्न- कार्यजातिभेदात्तदुपपत्तेः; प्रकृते च तदनभ्युपगमात्। पारोक्ष्यापारोक्ष्ये विहायान्यथाऽप्यसौ भविष्यतीति चेन्न- अनुपलम्भात्। सम्भाव्यते तावदिति चेत्- सम्भाव्यताम्, न त्वेतावताऽपि तमाश्रित्य करणनियमनिश्चयः। ࣇकु.3.403ट अज्ञातकरणत्वाच्च। यदज्ञायमानकरणजं ज्ञानं तत्साक्षादिन्द्रियजम्, यथा रूपप्रत्यक्षम्। तथाचेह भूतले घटो नास्तीति ज्ञानमिति। यथा वा स्मरणमज्ञायमानकरणजं साक्षान्मनोजन्म। कुतस्तर्हि न साक्षात्कार्यनुभवरूपम्? संस्कारातिरिक्तसन्निकर्षाभावादिति वक्ष्यामः। ࣇकु.3.404ट तथापि भावविषये इयं व्यवस्था, अभावज्ञानं त्वज्ञातकरणत्वेऽपि न साक्षादिन्द्रियजं भविष्यतीति चेन्न- उत्सर्गस्य बाधकाभावेन सङ्कोचानुपपत्तेः। अन्यथा सर्वव्याप्तीनां भावमात्रविषयत्वप्रसङ्गः, अविशेषात्। तथापि विपक्षे किं बाधकमिति चेत्- नन्विदमेव तावत्। अन्यदप्युच्यमानमाकर्णय। तद्यथा- अकारणककार्यप्रसङ्गः, रूपाद्युपलब्धीनामपि वाऽनिन्द्रियकरणत्वप्रसङ्गः। न ह्यनुमित्यादिभिरुपलभ्यमानकरणिकाभिश्चक्षुरादिव्यवस्थापनम्, अपित्वनुपलभ्यमानकरणिकाभी रूपाद्युपलब्धिभिरेव। यद्यपि साक्षात्कारिताऽपि तत्रैव पर्यवस्यत#ि, तथापि प्रथमतोऽनुपलभ्यमानकरणत्वमेव प्रयोजकं चक्षुरादिकल्पने। न ह्युपलभ्यमाने करणान्तरे साक्षात्कारिणीष्वपि तासु चक्षुरादि अनुपलभ्यमानं कश्चिदकल्पयिष्यत्। अत एवासाक्षात्कारित्वेऽपि स्मृतेर्मन एव करणमुपागमन् धीराः। संस्कारस्त्वर्थविशेषप्रत्यासत्तावुपयुज्यते, इन्द्रियाणां प्राप्यकारित्वव्यवस्थापनात्। ࣇकु.3.405ट भावावेशाच्च चेतसः। सर्वत्र हि बाह्यार्थानुभवे जनयितव्ये भावभूतप्रमाणाविष्टमेव चेत उपयुज्यते, नातोऽन्यथेति व्याप्तिः, तथैव शक्तेरवधारणात्। न ह्यनुपलब्धिमात्रसहायं तत् अभावेऽप्यनुभवमाधातुमुत्सहते, शब्दलिङ्गादेरपेक्षादर्शनात्। न च यत्र यदपेक्षं यस्य जनकत्वमुपलब्धम्,तदेव तस्यैव तदनपेक्षं जनकमिति न्यायसहम्। आर्देन्धनसम्बन्धमन्तरेणापि दहनाद्धूमसम्भावनापत्तेः। तथाच गतं कार्यकारणभावपरिग्रहव्यसनेन। ࣇकु.3.406ट अपि च - प्रतियोगिनि सामथ्र्यात् व्यापाराव्यवधानतः। अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात्।।21।। यद्धि प्रमाणं यद्भावावगाहि, तत् तदभावगाहि, यथा लिङ्गं शब्दो वा; घटाद्यवगाहि चेन्द्रियमिति। अन्यथा हि शब्दादिकमपि नाभावमावेदयेत्, भाव एव सामथ्र्यावधारणात्। न

चैवमेव न्याय्यम्। देवदत्तो गेहे नास्तीति शब्दात्, मया तत्र जिज्ञासमानेनापि न दृष्टो मैत्र इत्यवगतानुपलब्ध्याऽनुमानादप्यवगतेः। झ्कु.3.407ट ग्राहयतु वाऽऽश्रयमिन्द्रियम्, तथापि न तेनेदं व्यवधीयते, व्यापारत्वात्। अन्यथा सर्वसविकल्पकानां प्रत्यक्षत्वाय दत्तो जलाञ्चलिः स्यात्। नन्वेवं सति धूमोपलम्भोऽप्यस्य व्यापारस्स्यात्। तथा च गतमनुमानेनापीति चेन्न- यया क्रियया विना यस्य यत्कारणत#्वं न निर्वहति, तं प्रति तस्या एव व्यापारत्वात्। न च धूमाद्युपलब्धिमन्तरेण चक्षुषो वन्हिज्ञानकारणत्वं न निर्वहति संयोगवदिति। झ्कु.3.408ट अस्ति च भावाभावविपर्ययः। सोऽयं यस्य दोषमनुविधत्ते, तदेवात्र करणमिति न्याय्यम्। न चानुपलब्धिः स्वभावतो दुष्टा; नाप्यधिकरणग्रहणं प्रतियोगिस्मरणं वा स्वभावतो दुष्टम्; अनुत्पत्तिदशायामनुत्पत्तेः,उत्पत्तिदशायाञ्च स्वार्थप्रकाशनस्वभावताया अपरावृत्तेः। असंसृष्टयोरधिकरमप्रतियोगिनोः संसृष्टतया प्रतिमानं दुष्टम्; संसृष्टयोश्चासंसृष्टतयेति चेत्- नन्वयमेव विपर्ययः। तथाचाऽऽत्माश्रयो दोषः। तस्माद्दुष्टेन्द्रियस्य तद्विपर्ययसामर्थ्ये अदुष्टस्य तत्समीचीनज्ञानसामर्थ्यमपि। तथाच प्रयोगः- इन्द्रियमभावप्रमाकरणं तद्विपर्ययकरणत्वात्, यत् यद्विपर्ययकरणं तत् तत्प्रमाकरणम्, यथा रूपप्रमाकरणं चक्षुरिति। झ्कु.3.409ट विकल्पनात्खल्वपि। अघटं भूतलमिति हि विशिष्टधीरवश्यमिन्द्रियकरणिका स्वीकर्तव्या; प्रमाणान्तरं वा सप्तममास्थेयम्। यथा हि विशेष्यमात्रोपक्षीणमिन्द्रियमकरणमत्र, तथा विशेषणमात्रोपक्षीणाऽनुपलब्धिरपि न करणं स्यात्। स्वस्वविषयमात्रप्रवृत्तयोः प्रमाणयो#ः समाहारः कारणमिति चेन्न- विषयभेदे फलवैजात्ये च तदनुपपत्तेः। न हि मृत्सु तन्तुषु च व्याप्रियमाणयोः कुलालकुविन्दयोः समाहारस्स्यात्। नापि घटपटादिकारिणां चक्रवेमादीनां समाहारः क्वचिदुपयुज्यते। तत्र कर्बुरकार्याभावान्न तथा; प्रकृते तु विशिष्टप्रत्ययस्य परोक्षापरोक्षरूपस्य दर्शनात्तथेति चेन्न- विरुद्धजातिसमावेशाभावात्। भावे वा करम्बित (कर्बुर) एव कार्ये द्वयोरपि शक्तिरभ्युपगन्तव्या; दर्शनबलात्। न हि नियतविषयेण सामर्थ्येन कर्बुरकार्यसिद्धिः; अन्यत्रापि तथा प्रसङ्गात्। ननूभयोरप्युभयत्र सामर्थ्ये कोऽर्थो मिथःसन्निधानेनेति चेन्न- तत्सहितस्यैव तस्य तत्र सामर्थ्यादिति। एतेन सुरभि चन्दनमित्यादयो व्याख्याताः। तथाचाभावविषयेऽपीन्द्रियसामर्थ्यस्य दुरपढद्धड्ड14;नवत्वादलमसद्ग्रहेणेति। झ्कु.3.410ट स्यादेतत्- नागृहीते विशेषणे विशष्टबुद्धिरुदेति, तत्कार्यत्वात्। न च विशिष्टसामर्थ्ये केवलविशेषणेऽपि सामर्थ्यम्, केवलसौरभेऽपि चक्षुषो वृत्तिप्रसङ्गात्। अतोऽभावविशेषणग्रहणाय मानान्तरसम्भवः। अपि च कथमनालोचितोऽर्थ इन्द्रियेण विकल्प्येत? न च मानान्तरस्याप्येषा रीतिः,अनुमानादिभिरनालोचितस्याप्यर्थस्य विकल्पनात्। अप्राप्तेश्च। न ह्यभावेनेन्द्रियस्य संयोगादिः सम्भवति। न च विशेषणत्वम्, सम्बन्धान्तरपूर्वकत्वात्तस्य। अवश्याभ्युपगन्तव्यत्वाच्चानुपलब्धेः। न हि तदुपलब्धौ तस्याभावोपलम्भ इति चेत्- झ्कु.3.411ट उच्यते-(210)अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात्। प्राप्त्यन्तरेऽनवस्थानात्र चेदन्योऽपि दुर्घटः।।22।। झ्कु.3.412ट स ह्यर्थविशेषणीभविष्यन् केवलोऽपि विस्फुरेत्, यस्यावच्छेदकज्ञानं न व्यञ्जकम्। स च (वा) विकल्पयितव्य आलोच्यते, यो विशेषणज्ञाननिरपेक्षेणेन्द्रियेण विज्ञाप्यते। यस्तु तत्पुरःसर एव प्रकाशते, तत्र तस्य विकल्पसामग्रीसमवधानवत एव सामर्थ्यान्नायं विधिः।झ्कु.3.413ट स्वभावप्राप्तौ सत्यामप्यधिका प्राप्तिः प्रतिपत्तिबलेन रूपादावभ्युपगता। इह त्वनवस्थादुस्थतया न तदभ्युपगमः; न तु स्वभावप्रत्यासत्तिरेतावतैव विफलायते। झ्कु.3.414ट न चेदेवं, प्रमाणान्तरेऽपि सर्वमेतद्दुर्घटं स्यात्। तथाहि- सर्वमेव मानं साक्षात्परम्परया वा निर्विकल्पकविश्रान्तम्। न ह्यनुमानादिकमप्यनालोचनपूर्वकम्। ततोऽनालोचितोऽभावः कथमनुपलब्ध्यापि विकल्प्येत। न च तया तदालोचनमेव जन्यते,प्रतियोग्यनवच्छिन्नस्य तस्य निरूपयितुमशक्यत्वात्। शक्यत्वे वा किमपराद्धमिन्द्रियेण। तथा सम्बन्धान्तरगर्भत्वनियमेन विशेषणत्वस्य, मानान्तरेऽपि कः प्रतीकारः; तदभावस्य तदानीमपिसमानत्वात्। परस्य तादात्म्यमस्तीति चेत्- ननु यद्यसावस्ति, अस्त्येव; न चेत्, नैव।न ह्यभ्युपगमेनार्थाः क्रियन्ते, अनभ्युपगमेन वा निवर्तन्ते इति। झ्कु.3.415ट अवश्याभ्युपगन्तव्यत्वे कारणत्वं सिद्ध्येत्, न तु मानान्तरत्वम्। अन्यथा भावोपलम्भेऽप्यभावानुपलब्धिरेव प्रमाणं स्यात्; नेन्द्रियम्। अभावोपलम्भे भावानुपलम्भवत्भावोपलम्भे अभावानुपलम्भस्यापि वज्रलेपायमानत्वादिति। झ्कु.3.416ट (212) प्रत्यक्षादिभिरेभिरेवम् अधरो दूरे विरोधोदयः। प्रायो यन्मुखवीक्षणैकविधुरैरात्माऽपि नासाद्यते।। तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवम्। देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे।। 23।। ।। इति न्यायकुसुमाञ्चलौ तृतीयः स्तबकः ।। 3।।

---

# न्यायकुसुमाञ्जली/चतुर्थस्तबकः

https://sa.wikisource.org/s/abx
< न्यायकुसुमाञ्जली

## चतुर्थस्तबकः

ननु सदपी॰ारज्ञानं न प्रमाणम्, तल्लक्षणायोगात्; अनधिगतार्थगन्तुस्तथाभावात्। अन्यथा स्मृतेरपि प्रामाण्यप्रसङ्गात्। न च नित्यस्य सर्वविषस्यचानधिगतार्थता, व्याघातात्- अत्रोच्यते- अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक्। यथार्थानुभवोमानमनपेक्षतयेष्यते।।1।।

नह्यधिगतेऽर्थे अधिगतिरेव नोत्पद्यते, कारणानामप्रतिबन्धात्। न चोत्पद्यमानापि प्रमातुरनपेक्षितेति न प्रमा, प्रामाण्यस्यातदधीनत्वात्। नापि पूर्वाविशिष्टतामात्रेणाप्रामाण्यम्; उत्तराविशिष्टतया पूर्वस्याप्यप्रामाण्यप्रसङ्गात्। तदनपेक्षत्वेन तु तस्य प्रमाण्ये तदुत्तरस्यापि तथैव स्यात्, अविशेषात्। छिन्ने कुठारादीनामिव, परिच्छिन्ने नयनादीनां साधकतमत्वमेव नास्तीत्यपि नास्ति, फलोत्पादानुत्पादाभ्यां विशेषात्।

तत् फलं प्रमैव न भवति गृहीतमात्रगोचरत्वात् स्मृतिवदिति चेन्न- यथार्थानुभवत्वनिषेधे साध्ये बाधितत्वात्। अनधिगतार्थत्व(213)निषेधे सिद्धसाधनात्, साध्यसमत्वाच्च। व्यवहारनिषेधे तन्निमित्तविरहोपाधिकत्वात्, बाधितत्वाच्च। नचानधिगतार्थत्वमेव तन्निमित्तम्, विपर्ययेपि प्रमाव्यवहारप्रसङ्गात्। नापि यथार्थत्वविशिष्टमेतदेव; धारावहनबुद्ध्यव्याप्तेः।

न च तत्तत्कालकलाविशिष्टतया तत्राप्यनधिगतार्थ(र्थगन्तृ)त्वमुपपादनीयम्; क्षणोपाधीनामनाकलनात्। नचाज्ञातेष्वपि विशेषणेषु तज्जनितविशिष्टताप्रकाशत इति कल्पनीयम्; स्वरूपेण तज्जननेऽनागतादिविशिष्टतानुभवविरोधात्; तज्ज्ञानेन तु तज्जनने सूर्यगत्यादीनामज्ञाने तद्विशिष्टतानुत्पादात्। नचैतस्यां प्रमाणमस्ति। नन्वनुपकार्यानुपकारकयोर्विशेषणविशेष्यभावे कथमतिप्रसङ्गो वारणीयः? व्यवच्छित्तिप्रत्यायनेन; व्यवच्छित्तौ स्वभावेन। अन्यथा तत्रा(वा)व्यनवस्थानादिति। झ्कु.4.505ट ज्ञाततैवोपाधिरिति चेन्न- निराकरिष्यमाणत्वात्। तत्सद्भावेपि वा स्मृतेरपि तथैव प्रामाण्यप्रसङ्गात्। जनकागोचरत्वेप्युत्तरोत्तरस्मृतौ पूर्वपूर्वस्मरणजनितज्ञाततावभासनात्। झ्कु.4.506ट अस्तु वा प्रत्यक्षे यथातथा। गृहीतविस्मृतार्थश्रुतौ का वार्ता? अप्रमैवासाविति चेत्- गतमिदानीं वेदप्रामाण्यप्रत्याशया। नह्यनादौ संसारे,"स्वर्गकामो यजेते"ति वाक्यार्थः केनचिन्नावगतः; सन्देहेऽपि प्रामाण्यसन्देहात्। न च तत्रापि कालकलाविशेषाः परिस्फुरन्ति। न चैकजन्मावच्छेदपरिभाषयेदं लक्षणम्, तत्राप्यनुभूतविस्मृतवेदार्थं प्रत्यप्रामाण्यप्रसङ्गात्। झ्कु.4.507ट कथं तर्हि स्मृतेव्र्यवच्छेदः? अननुभवत्वेनैव। यथार्थोह्यनुभवः प्रमेति प्रामाणिकाः पश्य(ठ)न्ति; "तत्वज्ञाना(214)"दिति सूत्रणात्; "अव्यभिचारि ज्ञान"मिति च। ननु स्मृतिः प्रमैव किं न स्यात् यथार्थज्ञानत्वात् प्रत्यक्षाद्यनुभूतिवदिति चेन्न, सिद्धे व#्यवहारे निमित्तानुसरणात्। न च स्वेच्छाकल्पितेन निमित्तेन लोकव्यवहारनियमनम्; अव्यवस्थया लोकव्यवहारविप्लवप्रसङ्गात्। न च स्मृतिहेतौ प्रमाणाभियुक्तानां (प्रामाणव्यवहाराभियुक्तानां) महर्षीणां प्रमाणव्यवहारोऽस्ति; पृथगनुपदेशात्। उक्तेष्वनन्तर्भावादनुपदेश इति चेन्न- प्रत्यक्षस्यासाक्षात्कारिफलत्वानुपपत्तेः। लिङ्गशब्दादेश्च सत्तामात्रेण प्रतीत्यसाधनत्वादिति। झ्कु.4.508ट एवं व्यवस्थिते तक्र्यतेऽपि यत्- इयमनुभवैकविषया सती तन्मुखनिरीक्षणेन तद्यथार्थत्वायथार्थत्वे अनुविधीयमाना तत्प्रामाण्यमव्य(न)वस्थाप्य न यथार्थतया व्यवहर्तुं शक्यत (215) इति व्यवहारेऽपि पूर्वानुभव एव प्रमितिः, अनपेक्षत्वात्; न तु स्मृतिः, नित्यं तदपेक्षणात्। असमीचीने ह्यनुभवे स्मृतिरपि तथैव। नन्वेवमनुमानमप्यप्रमाणमापद्येत, मूलप्रत्यक्षानुविधानात्। न- विषयभेदात्। आगमस्तर्हि न प्रमाणम्, तद्विषयमानान्तरानुविधानात्। न- प्रमातृभेदात्। धारावाहिकबुद्धयस्तर्हि न प्रमाणम् आद्यप्रमाणानुविधानात्। न, कारणविशुद्धिमात्रापेक्षया प्रथमवदुत्तरासामपि पूर्वमुखनिरीक्षणाभावात्। कारणबलायातं काकतालीयं पौर्वापर्यमिति। झ्कु.4.509ट यदि हि (यदि तर्हि) स्मृतिर्न प्रमितिः, पूर्वानुभवे किं प्रमाणम्? स्मृत्यन्यथानुपपत्तिरिति चेन्न- तया कारणमात्रसिद्धेः। न तु तेनानुभवेनैव भवितव्यमिति नियामकमस्ति। अननुभूतेपि तर्हि स्मरणं स्यादिति चेत्- किं न स्यात्। नह्यत्र प्रमाणमस्ति। पूर्वान#ुभवाकारो(भवो)ल्लेखस्स्मृतेर्दृश्यते; सोऽन्यथा न स्यादिति चेत्- तत् किं बौद्धवत् विषयाकारान्यथानुपपत्त्या विषयसिद्धिस्त्वयापीष्यते? तथाभूतं ज्ञानमेव वा तत्सिद्धिः? आद्ये तद्वदेवानैकान्तिकत्वम्। न हि यदाकारं ज्ञानम्, तत्पूर्वकत्वं तस्येति नियमः; अनागतज्ञाने विभ्रमे च व्यभिचारात्। द्वितीये च (तु) स्मृतिप्रामाण्यमवर्जनीयम्। मा भूत् पूर्वानुभवसिद्धिः; किं नश्छिन्नमिति चेत्- न तर्हि स्मृत्यनुभवयोः कार्यकारणभावसिद्धिरिति। न, तदप्रामाण्येऽपि पूर्वापरावस्थावदात्मप्रत्यभिज्ञानप्रामाण्यादेव तदुपपत्तेः। योऽहमन्वभवममुमर्थम्, सोऽहं स्मरामीति मानसप्रत्यक्षमस्तीति। झ्कु.4.510ट न च गृहीतग्राहित्वमी॰ारज्ञानस्य; तदीयज्ञानान्तरागोचरत्वाद् वि॰ास्य। न च तदेव ज्ञानं कालभेदेनाप्रमाणम्; अनपेक्षत्वस्यापरावृत्तेः। तथापि वाऽप्रामाण्ये अतिप्रसङ्गादिति। झ्कु.4.511ट स्यादेतत्- अनुपकारकं (216) विषयस्य तदीयमेतदीयं वा न भवितुमर्हति, अविशेषात्। न च तस्येत्यनियतं तत्र प्रमाणम्, अतिप्रसङ्गात्। न च तदभिज्ञान(भिज्ञ)मन्तरेण तदुपकारस्योत्पत्तिः, तथाऽनभ्युपगमात्। अभ्युपगमे वा, कार्यत्वस्यानैकान्तिकत्वात्। अत्रोच्यत#े- झ्कु.4.512ट स्वभावनियमाभावादुपकारोऽपि दुर्घटः। सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा।।2।। विशेषाभावात्तत्रैव फलं नान्यत्रेत्यस्यापि नियमस्यानुपपत्तेः। स्वभावनियमेन चोपपत्तौ तथैव विषयव्यवस्थोपपत्तेः। अवश्यञ्चैतदनुम(भ्युपग)न्तव्यम्, अतीतादिविषयत्वा(या)नुरोधात्। न हि तत्र ज्ञानेन किञ्चित् क्रियते इति शक्यमवगन्तुम्; असत्वात्। न च तद्धर्मसामान्याधारं किञ्चित् क्रियते

